दशमे मासि सूतये । यथाग्निगर्भा पृथिवी यथा द्यौरिंद्रेण गर्भिणी । वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति ॥२२॥

अंते नाम गृह्णात्यसाविति तस्याः ॥

सोष्यन्तीमद्भिरभ्युक्षति । यथा वायुः पुष्करिणीं समिंगयति सर्वतः । एवा ते गर्भ एजतु सहावैतु जरायुणा । इंद्रास्यायं व्रजः कृतः सार्गलः सपरिश्रयः । तमिंद्र निर्जहि गर्भेण सावरांसहेति ॥२३॥

सोष्यन्तीमद्भिरभ्युक्षति प्रसवकाले सुखप्रसवनार्थमनेन मंत्रेण । 'यथा वायुः पुष्करिणीं समिंगयति सर्वतः । एवा ते गर्भ एजतु' इति ॥

जातेऽग्निमुपसमाधायांक आधाय कंस पृषदाज्यं संनीय पृषदाज्यस्योपघातं जुहोत्यस्मिन्सहस्रं पुष्यासमेधमानः स्वे गृहे । अस्योपसन्द्यां मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा । मयि प्राणांस्त्वयि मनसा जुहोमि स्वाहा । यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टं सुहुतं करोतु नः स्वाहेति ॥२४॥

अथ जातकर्म । जातेऽग्निमुपसमाधायांके आधाय पुत्रं, कंसे पृषदाज्यं संनीय संयोज्य दधि घृते, पृषदाज्यस्योपघातं जुहोति अस्मिन्सहस्रं इत्याद्यावापस्थाने ॥

अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधि मधु घृतं संनीयांनतर्हितेन जातरूपेण प्राशयति । भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवःस्वः सर्वं त्वयि दधामीति ॥२५॥

अथास्य दक्षिणं कर्णमभिनिधाय स्वं मुखं वाग्वागिति त्रिर्जपेत् । अथ दधि मधु घृतं संनीय अनंतर्हितेनाव्यवहितेन जातरूपेण हिरण्येन प्राशयत्येतैर्मंत्रैः प्रत्येकम् ॥

अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥२६॥

अथास्य नामधेयं करोति वेदोऽसीति । तदस्य तद्गुह्यं नाम भवति वेद इति ॥

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति ॥२७॥

अथैनं मात्रे प्रदाय स्वांकस्थं स्तनं प्रयच्छति यस्ते स्तन इत्यादिमंत्रेण ॥

**अथास्य मातरमभिमंत्रयते । इलासि मैत्रावरुणी वीरे वीरमजीजनत् । सा त्वं वीरवती भव याऽस्मान्वीरवतोऽकरदिति । तं वा एतमाहुरतिपिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥२८॥ इति चतुर्थं ब्राह्मणम् ॥**

अथास्य मातरमभिमंत्रयते इलाऽसीत्येनेन । तं वा एतमाहुरिति— अनेन विधिना जातः पुत्रः पितरं पितामहं चातिशेते इति श्रिया यशसा ब्रह्मवर्चसेन परमां निष्ठां प्रापदित्येवं स्तुत्यो भवतीत्यर्थः । यस्य चैवंविदो ब्राह्मणस्य पुत्रो जायते, स चैवं स्तुत्यो भवतीत्यध्याहार्यम् ॥ ६.४.—

**अथ वंशः। पौतिमाषीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रः कौशिकीपुत्रात्कौशिकीपुत्र आलंबीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्र काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥१॥**

**आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः शौंगीपुत्राच्छौंगीपुत्रः सांकृतीपुत्रात्सांकृतीपुत्र आलंबायनीपुत्रादालंबायनीपुत्र आलंबीपुत्रादालंबीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो मांडूकायनीपुत्रान्मांडूकायनीपुत्रो मांडूकीपुत्रान्मांडूकीपुत्रः शांडलीपुत्राच्छांडलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौंचिकीपुत्राभ्यां क्रौंचिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥२॥**

याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान्बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपो नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागंभिण्या अंभि-

ण्यादित्यादादित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥३॥

समानमा सांजीवीपुत्रात्सांजीवीपुत्रो मांडूकायनेर्मांडूकायनिर्मांडव्यान्मांडव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणः शांडिल्याच्छांडिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तंबायनाद्यज्ञवचा राजस्तंबायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥

इति वाजसनेयके बृहदारण्यकोपनिषदि षष्ठोऽध्यायः ॥

अथेदानीं समस्तप्रवचनवंशः । स्त्रीप्राधान्यात् । गुणवान्पुत्रो भवतीति प्रस्तुतम् । अतः स्त्रीविशेषणेनैव पुत्रविशेषणादाचार्यपरंपरा कीर्त्यते । तानीमानि शुक्लानीत्यव्यामिश्राणि ब्राह्मणेन । अथवा यानीमानि यजूंषि तानि शुद्धानीत्येतत् । प्रजापतिमारभ्य यावत्पौतिमाषीपुत्रः, तावदधोमुखो नियताचार्यपूर्वक्रमो वंशः समानमा सांजीवीपुत्रात् । ब्रह्मणः प्रवचनाख्यस्य । तच्चैतद्ब्रह्म प्रजापतिप्रबंधपरंपरयाऽऽगत्य अस्मास्वनेकधा विप्रसृतमनाद्यनंतं स्वयंभु ब्रह्म नित्यम् । तस्मै ब्रह्मणे नमः । नमस्तदनुवर्तिभ्यो गुरुभ्यः ॥ ६.५.—

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीशंकरभगवतः कृतौ बृहदारण्यकोपनिषद्भाष्यं समाप्तम् ॥

---

स्वामी अमरदास कृत

संस्कृत-टीका सहित

# एकादशोपनिषदः

ईशाद्यष्टसु श्रीमदु[illegible]नवर्यामरदासाख्यविदुषा विरचितयोपनिषन्मणिप्रभया, छान्दोग्यबृहदारण्यकयो- नित्यानन्दाश्रमविरचितया मिताक्षरया, कैवल्ये च शंकरानन्द विरचितया दी[illegible]या समलंकृताः ।

श्री शंकराचार्य के भाष्य को समझने के लिए स्वामी अमरदास की संस्कृत-टीका अत्यन्त उपादेय तथा सरल है । इसी- लिए भारत-विभाजन के पूर्व लाहौर में इसके कई संस्करण हाथों-हाथ निकल गये थे । विभाजन के बाद भी इसकी विशेष मांग के कारण इसका पुनः प्रकाशन किया गया है ।

पृष्ठ संख्या ७००

मूल्य सजिल्द १५-००

मोतीलाल बनारसीदास

दिल्ली :: पटना :: वाराणसी